# श्रीरामदूतं शिरसा नमामि

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहं ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ २॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदुतं शिरसा नमामि ॥ ३॥

From next verse onwards, in each line, recite shrIrAmadutaM shirasA namAmi twice, in the middle and in the end

मकुटरत्नकान्तिमथिततमिस्त्रं -अरुणोदयरुचिराननकमलं
स्वर्णपिङ्गलभास्वर नेत्रयुगलं - चरितमकरकुण्डलगण्डभागं
नवमणिमयरसनामध्यभागं - तरुणरुचिरशुभतरवरहारं
समलङ्कृतदिव्यस्वर्णोपवीतं - कटितटविलसितकाञ्चनचेलं
मञ्जुमञ्जीरमहितपदाब्जं - दिनमणिशतनिभदिव्यप्रकाशम् ॥

सकलसद्गुणवृन्दसारपयोधिं - दासमुखाम्बोजदशशतभानुं
वाल्मीकिकृतकाव्यवरसरोहंसं - श्रितजनकुवलयशीतमयूखं
रामलावण्याभ्रराजमयूरं - रामचन्द्रपदराजीवमधुपं
तरुणायतदोःस्तम्भगम्भीरं - सुग्रीव-श्रीराम सन्धानहेतुं
सुग्रीववेदितश्रीरामवृत्तान्तं - अग्निसाक्षीकृत अर्कजरामम् ॥

सीताभूषणसमर्पितरामं - श्रीरामसुग्रीवसख्योल्लासं
वालिवधोपायवरमृदुवाक्यं - सुग्रीवपट्टाभिषेकप्रवीणं

वानरसेवासमाहूतधीरं - सकलदेशागतशाखामृगनेतारं
रामचन्द्रदत्तरमणीयभूषं - स्वयम्प्रभादत्तसुफलातिभोज्यं
लङ्कागमनसमलङ्कृतदेहं - सागरोल्लङ्घनसम्पूर्णकायम् ॥

अब्धिमध्यमित्र अगपतिपूज्यं - सुरसामायाध्वान्तसूर्यप्रकाशं
छायाग्रहिच्छेदशमनस्वरूपं - दिव्यद्वेगकृतगोष्पादजलधिं
सुवेलाशिखराग्रशमिताभिगमं - लङ्किणीभञ्जनलावण्यसारं
लङ्कावरोधिनिश्शङ्कितहृदयं - सीतान्वेषणसुरशत्रुसदनं
वायुप्रेरितवरवनगमनं - सीतादर्शनचिन्तापहरणम् ॥

रावणदुर्वाक्य अक्षीणकोपं - सीतानिवेदितश्रीरामकुशलं
राघवीयकथारञ्जितरामं - रामाङ्गुलीयकरामनिवेद्यं
वसुधात्मजादत्तवरशिरोभूषं - अतिशयजलदर्प अशोकभङ्गं
दनुजनिवहवनदहनदावाग्निं - वज्रायुधघोरवालकरालं
सप्तमन्त्रिसुतशलभकृशानुं - जम्बुमालिवधचण्डप्रतापम् ॥

अक्षकुमारसंहरणविक्षेपं - ब्रह्मास्त्रबन्धितब्रह्मवरदानं
चातुर्भागसैन्यचण्डितरूपं - वायुप्रेरितवालाग्निज्वालं
सीताप्रसादितशीतलवालं - वरराक्षसगृहवह्निसन्दग्धं
कपिदृक्चकोरसङ्गतचन्द्रबिम्बं - तारानन्दनादि तरुचरयुक्तं
मधुवनमधुपानमत्तकपीन्द्रं - कौसलेयकार्यकरुणसमर्थम् ॥

रामनिवेदितरामवृत्तान्तं - वरविभीषणरक्षावाक्यनैपुण्यं
रामसंवर्धितराक्षससङ्ख्यं - अब्धिबन्धनकार्य अमितोत्साहं
प्रबलजलधिसेतुबन्धननिपुणं - धूम्रक्षाकम्पनत्रिशिरसंहारं
रामनामास्त्रेण राक्षसनाशं - रणकर्कशघोरराजितवेषं
रावणघनयुद्धरामतुरङ्गं - मेघनादसैन्यमृत्युस्वरूपं ॥

रक्षेन्द्रजिद्युद्धलक्ष्मणतुरङ्गं - लक्ष्मणमूर्छासंरक्षणहृदयं
सञ्जीवाद्रिगमनसन्तोषस्वान्तं - कालनेमिकृतघनमायायुक्तं
मकरबन्धीकृतमहितपदाब्जं - धान्यमालिनीशापधर्षितरूपं
कालनेमिदनुजखण्डितधीरं - दिकृताद्य्रधीशतीव्रप्रकोपं
गन्धर्वसैन्यसंक्षोभप्रतापं - स्तबकीकृतधृतसञ्जीवनाद्रिम् ॥

भरतसम्बोधितप्रशमितबाणं - माल्यवदादि महोदथधिहरणं
लक्ष्मणप्राणसंरक्षणनिलयं - सौमित्रिसम्मोहजलदसमीरं
अब्धिमध्यमथितराक्षसवरं - स्थूलजङ्घासुरतुमुलसंहरणं
सिन्धूल्लङ्घनजलदसमीरं - वालप्राकारसंवेष्टितवीरं
पाताललङ्काप्रवेशितधीरं - मत्स्यवल्लभधीरमहनीयभीतिम् ॥

मैत्रीकृतधीरमत्स्याधिपत्यं - दोर्दण्डीकृतामितधैर्यप्रतापं
भिन्नतुलायन्त्रभीमस्वरूपं - बलराक्षसकोटिभञ्जिसत्त्वं
श्रुतिवाक्यश्रवणसन्तोषितस्वान्तं - मैरावणकृतमर्मसंवेद्यं
मैरावणसैन्यमर्दितशूरं - महनीयातिघोरमैरावणाजिं
दोर्दण्डिवाक्यातिखण्तदैत्यं - नीलमेघकृतनिस्तुलराज्यं ॥

रामलक्ष्मणपूर्वलङ्काभिगमनं - सकलवानरस्तुतिसन्तोषहृदयं
प्रबलमूलबलप्रलयकालाग्निं - रामारावणयुद्धरामतुरङ्गं
दशकण्ठकण्ठविलुण्ठनदीक्षं - राक्षसानुजदत्तलङ्काभिषेकं
पुष्पकाधिरूढपृथ्वीशसहितं - साकेतपुरवाससबलसंयुक्तं
भक्तपापतिमिरभास्कररूपं - दशकण्ठवधोपायचातुर्ययुक्तम् ॥

एकैकराक्षस एकैकरूपं - दशकण्ठच्छेदनसीताप्रबोधं
अवनिजाधिपयुक्तराज्यप्रवेशं - अश्वमेधयाग अमितोत्साहं
दशशतशिरच्छेददीक्षाप्रतापं - दशशितशिरोधार्यभक्षाभिरक्तं

राक्षससैन्यादिभेदस्वरूपं - दशशतशिरच्छेददशरथसूनुं
सकलसैन्यावृतसाकेतवासं - बोधितकपिवर्यपूर्णस्वरूपम् ॥

झङ्कारोच्चाटितडाकिनीसैन्यं - चलितवालसंवेष्टितकायं
यजितरामपादयजुरादिवाक्यं - श्रीकाकुलेशाश्रितमन्दारं
भक्तजनकारणमुक्तिनिदानं - लीलाविनोदितदानवस्वरूपं
परिपालितभक्तपादपकल्पम् - बुधजनवेदितपूर्णस्वरूपम् ॥

मोहनघनभेदमुक्तेविवासं - भद्राचलरामभद्रसमेतं
वरसुन्दररामदासानुपालं - मङ्गलमञ्जनामारुतपुत्रं
श्रीरामदूतं शिरसा नमामि - श्रीरामदूतं शिरसा नमामि ॥

। इति श्रीरामदूतं शिरसा नमामि जपं सम्पूर्णम् ।